# Cuddles always say "I love you."

Show your little ones how much you love them! And is there a better way of doing that than giving them a huggable, cuddlable playmate?

Cuddles. From the people who have given children the delightful entertainer of a magazine, Chandamama. Cuddles. A whole new range of stuffed toys. And, your old favourites. And, cute surprises being introduced regularly. Each one a sweet, adorable companion to your child. Absolutely safe. Designed to withstand childhandling.

Well, the fun and excitement of the festive season is just round the corner. Make it memorable for your child with a special gesture. With a Cuddle.

- CUDDLES — Stuffed toys from Chandamama.
- SAMMO — Mechanical and electronic toys from Chandamama

**CUDDLES**

Manufactured in technical collaboration with Sammo Corporation South Korea

**CHANDAMAMA TOYTRONIX**

Chandamama Toytronix Private Limited, Chandamama Buildings, Vadapalani, Madras - 600 026

*from*

**THE HOUSE OF**

**CHANDAMAMA**

**CUDDLES AND SAMMO TOYS WILL BE AVAILABLE AT ALL LEADING TOY OUTLETS EXCEPT IN THE STATES OF ASSAM, HIMACHAL PRADESH, MADHYA PRADESH AND NORTH EASTERN STATES**

CASIO




अब झूमिए मस्ती में कैसिओ कीबोर्ड के साथ, क्योंकि इसमें है सुर और ताल का ऐसा अनोखा मेल कि आपका दिल गा उठे और कदम थिरकने लगें अपनी मनपसन्द धुनों के साथ। तो बस शुरू हो जाइये और फैला दीजिये अपनी मस्ती का रंग और कैसिओ की उमंग, चारों ओर!

SOUND KIDS




32 मिनी कीज़ • 25 पी सी एम प्रीसेट टोन्स • 30 रैप पैटर्न्स • बिल्ट इन "लैन्द" स्क्रैच • वॉइस इफैक्टर फंक्शन • 3 बिल्ट इन इफैक्ट पैड्स • मिनी माइक्रोफोन अटैच्ड




32 मिनी कीज़ • 100 पी सी एम प्रीसेट टोन्स • 19 पी सी एम ऑटो रिद्म्स • 13 "सुपर एकम्पनीमेन्ट" बैकिंग पैटर्न्स • 5 बिल्ट इन ड्रम पैड्स • 5 प्रीसेट डिमान्सट्रेशन ट्यून्स • डुवैल स्पीकर सिस्टम




32 मिनी कीज़ • 8 पी सी एम प्रीसेट टोन्स • आर ओ एम पैक कम्पैटिबल • मैलोडी गाइड फंक्शन • 5 बिल्ट इन साउन्ड इफैक्ट पैड्स • 6 बिल्ट इन डिमान्सट्रेशन ट्यून्स • मिनी माइक्रोफोन अटैच्ड • कैरिंग हैन्डल

**CITY MUSIC CO., PTE LTD.**
Singapore Tel: 3377058, 3377545

**ONFLO MUSIC CO., LTD.**
Hong Kong Tel: 722 4195

**RAINBOW PHOTO FINISHERS PTE LTD.**
Nepal, Kathmandu Tel: 221724

**GENERAL ENTERPRISES COMPANY**
U.A.E., Dubai Tel: 224131/2/3

**MAHMOOD SALEH ABBAR CO.**
Saudi Arabia, Jeddah Tel: (02)6473995

**ARABIAN CAR MARKETING CO., LTD.**
Oman Tel: 793741

**CASIO COMPUTER CO., LTD.**
Tokyo, Japan.

# वाक्यजिज्ञासा – ७

(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति। तस्य अधः तत्सम्बद्धं विवरणं भवति। ततः अन्यत् वाक्यं, पुनः विवरणम्। एवम् अत्र क्रमः।

विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते। अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते। शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः। तादृशाः, वाक्येन वाक्यद्वयेन वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम्। तावता एव 'किं शुद्धम्' इति ज्ञायते। 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम्।)

१२. बेळूरु (शिवमोग्गमण्डलम्) प्रदेशीयः वेङ्कटेशः लिखति–

**i) अध्यक्षत्वेन भाषमाणः ..... महोदयः उक्तवान्।**

**ii) अध्यक्षपदात् भाषमाणः ..... महोदयः उक्तवान्।**

**iii) अध्यक्षपदम् अलङ्कृत्य भाषमाणः ..... महोदयः उक्तवान्।**

**इति एतेषु कस्य वाक्यस्य प्रयोगः उचितः?" इति।**

o त्रिधा अपि प्रयोगः कर्तुं शक्यः इति भाति।

i) '**अध्यक्षत्वेन भाषमाणः**' इत्यत्र धर्मिगतं धर्मं पुरस्कृत्य व्यवहारः कृतः दृश्यते। अध्यक्षपदम् अलङ्कृतवति जने बहवः धर्माः सम्भवन्ति। तद्गतान् अध्यक्षत्वेतरधर्मान् व्यावर्तयितुम् एव एषः प्रयोगः कृतः। एवं च इतरधर्मव्यावृत्तिः अत्र फलम् इति वक्तव्यम्। 'प्रकृत्यादिभ्यः उपसङ्ख्यानम्' इति वार्तिकात् (करणत्वेन एव धर्मस्य विवक्षा इति भावः अस्ति चेत् कर्तृकरणयोः तृतीया इति सूत्रेण वा) तृतीया वक्तव्या। 'अध्यापकत्वेन न, मित्रत्वेन अहं भवन्तं वदामि' इत्यादिषु लौकिकप्रयोगेषु धर्मपुरस्कृतः व्यवहारः दृश्यते एव। अतः 'अध्यक्षत्वेन भाषमाणः' इति प्रयोगः उचितः एव।

"नम्रत्वेनोन्नमन्तः ...." इति भर्तृहरिप्रयोगः अपि अत्र उदाहर्तुं शक्यः।

ii) '**अध्यक्षपदात् भाषमाणः**' इत्यत्र ल्यब्लोपे पञ्चमी वक्तव्या। अध्यक्षपदम् अलङ्कृत्य इति, अध्यक्षपदे उपविश्य इति वा अर्थः उपवर्णयितुं शक्यः। ल्यबन्तपदस्य लोपात् अध्यक्षपदशब्दात् पञ्चमी*।

कौमुद्यां तु 'प्रासादात् प्रेक्षते' (प्रासादम् आरुह्य प्रेक्षते।) 'आसनात् प्रेक्षते (आसने उपविश्य प्रेक्षते।) इत्यादीनि उदाहृतानि। कौमुद्यां दत्तस्य उदाहरणस्य, प्रकृते चर्च्यमानस्य वाक्यस्य च सादृश्यं स्फुटम्। अतः 'अध्यक्षपदात् भाषमाणः' इति प्रयोगः न दुष्यति इति सिद्धम्।

* iii) **'अध्यक्षपदम् अलङ्कृत्य भाषमाणः'** इत्यत्र तु सर्वं स्फुटम् एव। न हि अत्र अन्वयक्लेशः। न वा अर्थावगमे कठिनता। न वा कारकविषये भ्रमः। सरलं वाक्यम् एतत्।

एवं च तात्पर्यं सिध्यति यत् त्रिधा अपि प्रयोगः शक्यः इति। तरतमभावः अपि चिन्तनीयः नास्ति अत्र। शैलीभेदात् एतानि वाक्यानि सम्पन्नानि। यत् वाक्यं यस्मै रोचते तत् वाक्यं प्रयोक्तुम् अर्हति कश्चित्।

**१३. कृषिकः नगरे फलानि विक्रीणाति।**

० 'विक्रीणाति' इति अशुद्धं रूपम्। **'विक्रीणीते'** इत्येव प्रयोक्तव्यम्। केवलः क्रीञ् धातुः उभयपदी। अतः क्रीणाति, क्रीणीते इति रूपद्वयम् अपि अस्ति तस्य। स्वधनदानपूर्वकम् अन्यतः यदा वस्तु स्वीक्रियते तदा क्रीणातेः प्रयोगः।

अन्यतः धनं स्वीकृत्य स्ववस्तु यदा दीयते तदा विक्रीणीते इति प्रयोगः। अत्र 'वि' इति उपसर्गः। 'वि' इति उपसर्गस्य योगे नित्यम् आत्मनेपदित्वं क्रीञ् धातोः[1]। तदा परस्मैपदित्वं तु कथमपि न भवति। अतः 'विक्रीणाति' इति प्रयोगः असाधुः एव। 'विक्रीणीते' इत्येव प्रयोगः करणीयः।

'क्रीणाति' इत्यत्र तु (उभयपदित्वे सति अपि) परस्मैपदित्वं तु रूढम्। रूढिप्राबल्यात् विक्रीणीते इत्यत्र अपि परस्मैपदिभ्रमः उत्पन्नः स्यात्।

**१४. 'पुनः शुभारम्भम्' इति मत्वा पुनरपि कार्यारम्भः करणीयः।**

० **'शुभारम्भः'** इति प्रयोक्तव्यम्। आरम्भशब्दः पुंलिङ्गे। अत्र कविप्रयोगो यथा– "चित्राभिलारम्भ इवावतस्थे" (रघु० १०.७६) इति। "चण्डारम्भः समीरो वहति परिदिशं भीरु किं सम्भ्रमेण" (वेणीसंहारे २.१९) इति वा।

पूर्वोक्तवाक्यस्य प्रयोक्त्रा एकत्र आरम्भः इति शुद्धं प्रयुक्तम्। अपरत्र 'आरम्भम्' इति दोषपूर्णप्रयोगः कृतः। अतः अनवधानात् एषः दोषः कृतः इति मन्यामहे।

---

* ल्यब्लोपे कर्मण्यधिकरणे च – वार्तिकम्।

[1] परिव्यवेभ्यः क्रियः – १.३.१८

Ekco®

# MARKERS

प्राप्याश्चतुर्विंशतेः संघाते।

नव्यतमं तत्! सुचारुस्वरूपम्! विविधेषु सूज्ज्वलवर्णेषु च!

लक्षशः अंकनिकसंचाः अमेरिकायाः संयुक्तगणराज्येषु निर्याप्यन्ते!

प्राप्या : द्वादशानामपि संघाते।







भारतेष्विमा निर्मातारः निर्यापकाश्च।

SureShot/336/Sans.




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## क्षमया किं न सिध्यति?

सद्यःकाले राजधान्यां नवदेहल्यां काचित् सभा प्रवृत्ता। तस्याः चर्चाविषयः आसीत्– मैत्री क्षमा चेति। अहो, हितकरं चिन्तनं खलु एतत्! वस्तुतस्तु, विश्वभ्रातृत्वं शान्तिः च इत्येतयोः भावनयोः विस्तारः एव मैत्री क्षमा च।

मानवाः पृथिव्यां समभावेन तिष्ठेयुः। कोऽपि अत्र पृथग्भूय स्थातुं न अर्हति। समाजेन यत् दीयते तत् समानतया विभज्य स्वीकरणीयं मानवैः। एतत् एव मैत्र्याः आधारभूतं तत्त्वम्।

परस्परमैत्र्या युक्ताः परस्परं पीडयितुं नार्हन्ति खलु? यदि कश्चित् कञ्चित् पीडितवान्, खेदितवान् वा स्यात् तर्हि सः क्षमाम् अर्हति, जनैः क्षाम्यते चापि। 'दोषकरणं मानवप्रकृतिः, क्षमाप्रदर्शनं च दैवत्वम्' इति वचनं स्मर्तव्यम् अत्र।

क्षमा सहनां सूचयति। बैबल्ग्रन्थः (सेण्ट् म्याथ्यू) वदति– 'अहं वदामि यत् धार्ष्ट्यं प्रतिरोधः वा न करणीयः। यः दक्षिणकपोले ताडयति तस्य पुरतः वामकपोलः प्रदर्शनीयः' इति। क्षमाविषये इतोऽपि उदात्ततरं वचनं किमपि अन्यत् स्यात् किम्?

नवदेहल्यां प्रवृत्तायां सभायां भाषमाणः अस्माकं प्रधानमन्त्री उक्तवान् यत् अहिंसा क्षमा च सदा प्रोत्साहनीये। ते सदा सर्वोत्कर्षेण विजयेताम्। मित्रयोः मध्ये यथा ते निर्बाधं तिष्ठतः तथैव देशयोः मध्ये अपि ते भवेताम्। तदा एव क्रिसमस्उत्सवस्य सन्देशः– पृथिव्यां शान्तिः, मानवेषु सद्भावः इत्येषः पालितः भवेत् इति।

सम्पुटः–८ डिसेम्बर्–१९९१ सञ्चिका–९

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नई उमर के नये रंग





मौज ही मौज
स्कूल में आए
नए फ़ेविक्रिल
स्टूडेंट पोस्टर कलर्स
ऐसा रंग जमाएं
रंग मुलायम उभरा-उभरा



तोता–हरा-हरा लगे खरा



चटख लाल, नीला,
चमकीला
सफेद निराला ज्यों बर्फीला
हर रंग अलबेला
तो झटपट चित्रों में रंग भरो
नए फेविक्रिल स्टूडेंट
पोस्टर कलर्स के संग
मौज करो !
देख तुम्हारा काम और
इसका दाम मम्मी हुई हैरान !



मुफ़्त



पेंट-ए-पोस्टर

पाने के लिए इस पते पर लिखें–फ़ेविक्रिल, पो. बॉक्स 17437 अंधेरी (पूर्व), बंबई- 400 059.

नए फ़ेविक्रिल® स्टूडेंट पोस्टर कलर्स

मुफ़्त हर लिलिपुट किट के साथ स्टेन्सिल



फेविकोल ब्राण्ड एडहेसिव्स के निर्माता की ओर से

कृपया मेरे लिए मुफ़्त फ़ेविक्रिल पेंट-ए-पोस्टर तुरंत भेज दें.

नाम : ________ उम्र : ________
पता : ________
________
स्कूल ________

# 'शान्तिमार्गे दृढपदानि





महाशक्तिशालिनौ अमेरिका-रशियादेशौ, ययोः च समीपे भयानकानाम् अण्वस्त्राणां राशिरेव अस्ति, स्वस्य अण्वस्त्रसङ्ग्रहं न्यूनीकर्तुं सद्यः सन्धिम् अङ्गीकृतवन्तौ। गतजुलैमासस्य ३१ तमे दिनाङ्के मास्कोनगरे प्रवृत्ते समावेशे उभयदेशयोः नेतारौ अपि सम्मिलितौ सन्तौ 'स्टार्ट्' (स्ट्रेटजिक् आर्म् रिडक्शन् ट्रीटी) नामके सहमतिपत्रे हस्ताङ्कनं कृतवन्तौ। जागतिकयुद्धभीतेः निवारणे एषः सन्धिः नितरांम् उपकरोति इति प्राज्ञाः वदन्ति।

अमेरिकाध्यक्षः जार्ज् बुष् रशियाध्यक्षः गोर्बचेव् च ऐक्यप्राथम्येन परस्परं मिलितवन्तौ इति न। तथापि, जुलैमासस्य अन्तिमे दिनद्वये मास्कोनगरे तयोः यः समावेशः जातः सः पञ्चाशद्वर्षेभ्यः अनुवृत्तस्य परस्परसन्देह-कन्दरस्य निवारणे, परस्परनाशकारिकायाः आयुधसङ्ग्रहस्पर्धा- प्रवृत्तेः दूरीकरणे च समर्थः जातः।

अमेरिका-रशियादेशाभ्यां यः अस्त्रसङ्ग्रहः क्रियते, तेन जागतिकयुद्धस्य भीतिः वर्धते, अतः उभाभ्याम् अपि अस्त्रसङ्ग्रहप्रवृत्तिः परित्यक्तव्या' इति बहवः देशाः निवेदितवन्तः। संयुक्तराष्ट्रसङ्घेन अपि एतद्विषये प्रयत्नः कृतः। एतस्य परिणामतः १९८२ तमे वर्षे '५००

अस्त्रसङ्ग्रहः न्यूनीकरणीयः' इति आशयेन चर्चायाः आरम्भः जातः।

नव वर्षाणि यावत् एषा चर्चा अनुवृत्ता। अन्ते इदानीम् उभौ अपि देशौ अङ्गीकृतवन्तौ यत् ३०% परमाण्वस्त्रसङ्ग्रहः न्यूनीक्रियते इति। एतदनुगुणम् अमेरिकादेशेन ७००० अस्त्राणि (२५%), रशियादेशेन च ९००० अस्त्राणि (३५%) नाश्यन्ते।

सुरक्षाविशेषज्ञाः अभिप्रयन्ति यत् ४०० अण्वस्त्राणि सन्ति चेदपि कोऽपि देशः प्रतिस्पर्धिदेशं समग्रतया नाशयितुम् अर्हति इति। पूर्वप्रस्तुतस्य सन्धेः अयं विशेषः यत् उभौ अपि देशौ स्वसमीपे १६०० परमाण्वस्त्रवाहकानि स्थापयितुम् अर्हन्ति, न तु ततोऽपि अधिकानि। अतः असङ्ख्येषु अण्वस्त्रेषु सत्सु अपि तौ देशौ तेषाम् उपयोगं कर्तुं नार्हन्ति।

एषः स्टार्ट् (START) सन्धिः पञ्चदशवर्षाणि यावत् व्यवहारे स्थास्यति। पुनः प्रतिपञ्चवर्षम् एषः सन्धिः नवीकरिष्यते। सन्धेः अपरं वैशिष्ट्यं यत् यदा अपेक्ष्यते तदा उभयदेशयोः प्रतिनिधिभिः सहितां समितिं विरचय्य परस्परयोः शस्त्रसङ्ग्रहपरिशीलनं कर्तुं शक्यते इति।

सन्धिप्रस्तावश्रवणात् वयम् एतावत् तु वक्तु शक्नुमः एव यत् प्रपञ्चेन शान्तिस्थापनमार्गे द्वित्राणि दृढपदानि स्थापितानि इति।





# पिशाचीपीडा

ललितपुरनामकस्य ग्रामस्य पार्श्वे कश्चन कासारः आसीत्। कासारस्य पार्श्वे प्राचीनः सुविशालः वटवृक्षः आसीत्। कुतश्चित् आगता काचन पिशाची एतं वृक्षम् अपश्यत्। दुश्चेष्टापरायै तस्यै पिशाच्यै एषः वृक्षः नितराम् अरोचत। सा तस्मिन् एव वृक्षे वासम् अकरोत्।

कदाचित् सायङ्कालसमये कुत्रापि प्रस्थितौ रामनाथः घनश्यामश्च तस्य वृक्षस्य अधः उपविष्टवन्तौ। घनश्यामस्य शिरसि गोपादमिता दीर्घा शिखा आसीत्।

परपीडने पिशाच्याः विशेषासक्तिः। सा घनश्यामं पीडयितुम् इच्छन्ती अदृश्यरूपेण गत्वा बलात् घनश्यामस्य शिखाम् आकृष्टवती। घनश्यामः अधः पतितः।

'हँ हो' इति आक्रोशनं कुर्वन् उत्थितः घनश्यामः क्रोधेन रामनाथं पश्यन्– "किं रे, मम शिखां किमर्थम् आकृष्टवान् भवान्? कीदृशः परिहासक्रमः एषः! अविवेकितायाः पराकाष्ठा एषा" इति वदन् तं कपोले ताडितवान्।

एतत् श्रुत्वा रामनाथः अपि क्रोधं प्राप्य– "मिथ्यां वदन् मां ताडितवान् अपि भवान्। अयोग्यस्य भवतः शिखां किमर्थम् अहं स्पृशेयम्? यत् मया न कृतं तत् मयि आरोपितवान् भवान्। अतः अहम् इदानीं भवतः शिखां गृहीत्वा भवन्तं कासारे मज्जयिष्यामि" इति वदन् घनश्यामस्य शिखां गृहीतवान्।

ततः किम्, उभौ अपि परस्परं निन्दन्तौ ताडितवन्तौ, भूमौ पातितवन्तौ च। अन्यस्य ताडनात् पतनात् च व्रणितौ तौ परस्परं दोषारोपणं कुर्वन्तौ ग्रामप्रमुखस्य समीपं गतवन्तौ।



एतत्सर्वं दृष्टवत्याः पिशाच्याः तु महान् सन्तोषः। सा, अदृश्यरूपेण एव तयोः अनुसरणम् अकरोत्!

यदा तौ ग्रामं प्राप्तवन्तौ तदा ग्रामप्रमुखः मित्रैः परिवृतः सन् चाटूक्तीः श्रुत्वा हसन् आसीत्। तस्य हस्ते धूमवर्तिका आसीत्।

घनश्यामः ग्रामाधिकारिणः पुरतः स्थित्वा प्रवृत्तं समग्रं निवेद्य— "शिखां बलात् आकृष्य मां पातितवन्तम् एतं यथायोग्यं कठोरं दण्डयतु श्रीमन्!" इति प्रार्थितवान्।

तदा रामनाथः— "श्रीमन्! एषः मिथ्यावादी। एतस्य वचने मा विश्वसितु कृपया। वस्तुतः मया आरम्भे एतस्य शिखा न स्पृष्टा एव। मिथ्यारोपं कृत्वा एषः यदा मां ताडितवान्, व्रणितं च कृतवान् तदा अहं कोपेन एतस्य शिखां गृहीतवान्। एषा वस्तुस्थितिः" इति निवेदितवान्।

उभयोः अपि कथनं शृण्वन् ग्रामाधिकारी अग्निसहितां धूमवर्तिकाम् अधः स्थापितवान्। अन्ये सर्वे घनश्याम-रामनाथयोः कथनम् आसक्त्या शृण्वन्तः आसन्। तदा पिशाची अग्निसहितां धूमवर्तिकां ग्रामाधिकारिणः कोषे अस्थापयत्।

किमपि वक्तुम् उद्युक्तः ग्रामाधिकारी कोषात् निर्गच्छन्तं धूमं दृष्ट्वा आश्चर्यचकितः भीतः च। सम्भ्रान्तः सः कोषे हस्तं स्थापितवान्। तेन तस्य हस्तः दग्धः। युतके तु कोषभागः दग्धः एव। एतेन ग्रामाधिकारिणः कोपः प्रवृद्धः। सः कोपेन उत्थाय— "भवन्तौ एतस्य वर्षस्य करम् अद्यावधि न समर्पितवन्तौ। इदानीं मां वञ्चयितुम् एव एवं कलहव्याजेन अत्र आगतवन्तौ। सर्वं जानामि अहम्। श्वः सायङ्कालाभ्यन्तरे करः यदि न दीयेत तर्हि भवन्तौ कारागारे स्थाप्येते मया" इति गर्जितवान्।

ततः युतकपरिवर्तनार्थं सः गृहं प्रति प्रस्थितवान्। पिशाची अपि तम् अनुसृत्य अगच्छत्।

ग्रामाधिकारिणः पत्नी गिरिजा चण्डी। पत्युः युतकस्य कोषप्रदेशः दग्धः इति ज्ञात्वा सा महता कोपेन— "अहो, दुरभ्यासफलम्!

नूतनं युतकं दग्धं खलु? एतावता अपि विवेकः न प्राप्तः भवता। धिक् भवन्तम्। धिक् भवतः दुरभ्यासम्" इति निन्दितवती।

'पतिपत्न्योः कलहः यदि वर्धेत तर्हि इतोऽपि सन्तोषः स्यात्' इति आलोच्य पिशाची ग्रामाधिकारिणः सञ्चारदण्डम् उन्नीय बलेन गिरिजाम् अताडयत्। गिरिजा आक्रोशनं कुर्वती भूमौ पतितवती। किं प्रवर्तते इति अजानन् ग्रामाधिकारी स्तब्धः अभवत्।

वेदनाम् असहमाना गिरिजा कोपेन फूत्कुर्वती उत्थाय उच्चस्वरेण– "हो, हो, मां निर्दयं ताडयतः भवतः कियत् औद्धत्यम्! भवतः मदम् अपनेष्यामि अद्य। परह्यः गुरुराजतः उत्कोचं स्वीकृत्य अन्यथा निर्णयः यः श्रावितः भवता तत् प्रकटीकरिष्यामि। भवतः डम्भाचारं प्रकटयिष्यामि। सर्वे भवन्तम् उद्दिश्य यथा थूत्कुर्युः तथा करिष्यामि" इति पतिं वदन्ती, "आगच्छन्तु ग्रामजनाः, आगच्छन्तु" इति ग्रामीणान् आहूय पत्या कृतानि अकृत्यानि सर्वाणि श्रावितवती।

ग्रामाधिकारी नितरां लज्जितः अभवत्। ततः दिनद्वयं यावत् ग्रामे एतद्विषये एव चर्चा प्रवृत्ता। कुपिताः जनाः 'एषः ग्रामाधिकारी पदात् च्यावनीयः' इति ज्येष्ठाधिकारिणं निवेदितवन्तः। दिनत्रयाभ्यन्तरे एव एषः ग्रामाधिकारी पदात् निष्कासितः अभवत्।



नूतनः ग्रामाधिकारी नियुक्तः अभवत् च।

ततः सप्ताहानन्तरं कदाचित् पिशाची वटवृक्षस्य उपरि उपविश्य तन्द्रायां निमग्ना आसीत्। तावता वृक्षस्य अधः उपविश्य वार्तालापं कुर्वतोः ध्वनितः पिशाच्याः जागरणं जातम्। तयोः वार्तालापात् पिशाच्या ज्ञातं यत् तौ चोरौ इति, तयोः नाम कृष्णः भीमः च इति च।

ततः अल्पे काले भीमकृष्णौ ततः प्रस्थितवन्तौ। पिशाची तयोः अनुसरणम् अकरोत्। तौ चोरौ कुसीदवणिजः दुर्गादासस्य गृहं प्राप्य प्राकारम् अतिक्रम्य गत्वा भित्तिभेदनं कृतवन्तौ। भीमः रन्ध्रमार्गेण अन्तः गतवान्। कृष्णः रक्षणार्थं तत्रैव स्थित्वा परितः दृष्टिं प्रसारयन् आसीत्।



उच्चैः आक्रोशनं कृतवान्। तत् श्रुत्वा दुर्गादासगृहसदस्याः प्रतिवेशिनः च जागरणं प्राप्य धावन्तः आगतवन्तः। चोरौ गृहीत्वा रक्षकप्रमुखाधीनं कृतवन्तः च।

जनानां निर्गमनस्य अनन्तरं रक्षकप्रमुखः चोरौ उद्दिश्य– "कीदृशौ असमर्थौ भवन्तौ! अल्पं चौर्यं कर्तुम् अपि न जानीतः भवन्तौ। एवं चेत् प्रतिमासं मह्यं यत् दातव्यं तत् कथं दातुं शक्नुतः भवन्तौ? इदानीं भवन्तौ बन्धमुक्तौ करोमि। यत्रकुत्रापि चौर्यं कुरुताम्। श्वः प्रातःकालाभ्यन्तरे सहस्रं रूप्यकाणि आनीय मह्यं दातव्यानि। अन्यथा श्वः भवन्तौ गृहीत्वा आजीवकारागारवासेन दण्डयिष्यामि" इति उक्तवान्।

एतत् श्रुत्वा पिशाची ज्ञातवती यत् एषः रक्षकप्रमुखः महोत्कोचग्राही इति। एषः योग्येन क्रमेण बोधनीयः इति निश्चितवती पिशाची।

अनन्तरदिने रात्रौ कुत्र चौर्यं करणीयम् इति चिन्तयन्तौ भीम-कृष्णौ वटवृक्षस्य अधः उपविष्टवन्तौ आस्ताम्। एतत् जानती पिशाची भूस्वामिनः गृहं गत्वा चौर्येण आभरणानि आनीय चोरयोः पुरतः अपातयत्। 'काचित् दयामयी देवता आवयोः विषये कृपां प्रदर्शयन्ती आभरणानि पातितवती' इति चिन्तयन्तौ चोरौ रक्षकप्रमुखस्य गृहं गत्वा उत्कोचरूपेण आभरणानि अर्पितवन्तौ। निरीक्षापेक्षया

तावता पिशाची अग्रे गत्वा गृहं प्रविशतः भीमस्य पादौ दृढम् अगृह्णात्। कोऽपि आगतः इति भाति इति आलोच्य भीमः प्रत्यागन्तुं प्रयत्नं कृतवान्। पिशाची तं तत्रैव नोदयित्वा दृढम् अगृह्णात्। ततः प्रतिगन्तुं प्रयतमानः भीमः किमपि कर्तुम् अशक्नुवन् कोपं प्राप्तवान्।

कष्टम् अनुभवन्तं भीमं दृष्ट्वा कृष्णः समीपम् आगतवान्। तदा पिशाची ग्रहणं शिथिलम् अकरोत्। रन्ध्रमार्गेण अग्रे गच्छन्तं भीमं कोऽपि अन्तर्भागतः गृहीतवान् इति आलोच्य कृष्णः भीमम् आक्रष्टुम् अवनतवान्। तदा नितरां क्रुद्धः भीमः कृष्णं बलेन पादेन प्रहृतवान्।

पादप्रहारेण पीडितः दूरे पतितः च कृष्णः

अधिकं प्राप्तम् इत्यतः रक्षकप्रमुखः नितरां सन्तुष्टः।

रक्षकप्रमुखस्य पत्न्याः आभरणमोहः अत्यधिकः। सा तानि आभरणानि धृत्वा सायं हरिद्राकुङ्कुमकार्यक्रमार्थं भूस्वामिगृहं गर्वेण गतवती। तत्र भूस्वामिनः पत्नी रक्षकप्रमुखपत्न्या धृतानि आभरणानि दृष्ट्वा आश्चर्यचकिता। सा झटिति गत्वा आभरणपेटिकां दृष्टवती। तत्र तस्याः आभरणानि न आसन्। सा पतिं प्रवृत्तं समग्रं निवेदितवती। कुपितः भूस्वामी तर्जनस्वरेण रक्षकप्रमुखपत्नीं पृष्टवान्– "एतानि भवत्या कुतः प्राप्तानि?" इति। "मम पत्या एतानि मह्यं दत्तानि" इति उक्तवती सा। भूस्वामी रक्षकाप्रमुखम् आनाय्य आभरणविषये पृष्टवान्।

भीमकृष्णौ स्वसमीपे अवशिष्टानाम् आभरणानां विक्रयणार्थं कस्यचित् सुवर्णकारस्य आपणं गतवन्तौ। तेन एव स्वर्णकारेण तानि आभरणानि निर्माय भूस्वामिने दत्तानि आसन्। अतः सः तानि अभिजानन् चोराभ्यां सह भूस्वामिगृहम् आगतवान्।

एवं चोरौ रक्षकप्रमुखः च कारागारे स्थापिताः अभवन्। एतत्सर्वं दृष्टवत्याः पिशाच्याः महान् सन्तोषः जातः।

अथ कदाचित् वटवृक्षस्य अधः उपविश्य चत्वारः वार्तालापं कुर्वन्तः आसन्। तेषां वार्तालापतः पिशाची ज्ञातवती यत् तस्मिन् ग्रामे ज्ञानदीपः नाम कश्चन पण्डितः मन्त्रज्ञः



निवसति इति, चतुर्वर्षवयस्के पौत्रे तस्य महती प्रीतिः इति च।

'एषः पण्डितः मया सम्यक् पीडनीयः' इति निश्चित्य पिशाची तत्क्षणे एव ततः निर्गत्य गृहस्य पुरतः क्रीडायां मग्नं चतुर्वर्षीयं बालकम् उन्नीय किञ्चन फलोद्यानं प्रति अनयत्। बालकस्य पुरतः विविधानि फलानि राशीकृत्य, 'अग्रे किं प्रवर्तिष्यते इति परिशीलयिष्यामि' इति आलोच्य समीपस्थे आम्रवृक्षे उपाविशत् च।

ज्ञानदीपः पौत्रस्य अदर्शनात् किञ्चिदिव भीतः। मन्त्र[illegible] ततः सः ज्ञातवान् यत् पौत्रं पिशाची फलोद्यानं नीतवती अस्ति इति। कैश्चित् ग्रामीणैः सह सः फलोद्यानं गतवान्। तत्र पौत्रः फलानि खादन् क्रीडन् आसीत्। पौत्रप्राप्त्या सन्तुष्टः अभवत् ज्ञानदीपः।

'एतत्सर्वं या कृतवती सा पिशाची अन्यान् अपि पीडयेत्। अतः अद्यैव एषा निग्रहणीया' इति आलोच्य ज्ञानदीपः दण्डेन वलयं निर्माय तत्र मन्त्रेण पिशाच्यावाहनं कृतवान्। कम्पमाना पिशाची तस्य पुरतः आगत्य साष्टाङ्गं नमस्कारम् अकरोत्।

"मम पौत्रः भवत्या एव खलु अत्र आनीतः? किमर्थम् एवं कृतवती भवती? इतः पूर्वं भवत्या अत्र किं किं कृतम्?" इति पृष्टवान्। पिशाची आत्मना कृतं विस्तरेण निवेदितवती।

"अये दुश्चेष्टापरपिशाचि! अद्यावधि भवत्या यानि कृत्यानि कृतानि तैः ग्रामस्य हितम् एव सिद्धम्। उत्कोचग्राही ग्रामाधिकारी, रक्षकप्रमुखः, चोरौ च बद्धाः अभवन्। किन्तु मम पौत्रम् अपहरन्त्या भवत्या अनुचितं कृतम्। एतदर्थं भवत्यै अल्पः दण्डः विधीयते मया। भवत्या अद्यैव एषः प्रदेशः परित्यक्तव्यः। इतः परम् इतः दशयोजनदूरे कुत्रापि भवत्याः पीडा न स्यात्। एतद्विरुद्धं व्यवहृतं चेत् तु मया दिग्बन्धनं क्रियते" इति उक्तवान् ज्ञानदीपः।

"यथाज्ञापयति भवान्" इति वदन्ती पिशाची ततः अदृश्या अभवत्।






# अपूर्वस्य साहसगाथा

## ८

(अपूर्वस्य आदेशस्य अनुगुणं समीरः समुद्रचोरेभ्यः पञ्चानां बालकानां रक्षणार्थं गण्डमीनानां साह्राय्येन चोरनौकां प्रविष्टवान्। सद्यः एव नायकत्वपदम् आरूढवान् गरलकण्ठः वणिजां नौकायाः लुण्ठनार्थं योजनां कृतवान् आसीत्। किन्तु सा एव तस्य तत्पक्षीयानां बन्धनस्य कारणं जाता। वणिजां नौका चोरनौका च तीरम् आगते। एतस्य सर्वस्य कारकः अपूर्वः एव इति उक्तवान् समीरः। तदनन्तरम्.....)

समीरमुखात् अपूर्वस्य असदृशं सामर्थ्यं श्रुत्वा नितरां सन्तुष्टः अभवत् वणिक्प्रमुखः। अनन्तरं सः तान् बालकान् गृहं प्रापितवान्। सकुशलं प्रत्यागतान् बालान् दृष्ट्वा तेषां मातापितरः नितरां सन्तुष्टाः। बालानां साहसयात्रावार्ता क्षणाभ्यन्तरे ग्रामे प्रसृता। ग्रामीणाः सन्तोषं प्रकटयन्तः उत्साहेन आगत्य बालान् अभिनन्दितवन्तः।

राजा गरलकण्ठं तदनुयायिनः च कारागारे संस्थाप्य कठिनपरिश्रमदण्डेन दण्डितवान्। समुद्रचोराणां ग्रहणं दण्डनं च प्रजानां प्रीत्यै अभवत्। राजा बालान् बहुधा श्लाघितवान्। तदा ते बालाः उक्तवन्तः यत् समीरस्य सूचनानुगुणम् अस्माभिः व्यवहृतं, तावदेव इति। राजा समीरं विशेषतः सत्कृतवान्।

प्रशंसां सत्कारं च भाराय भावयति समीरः। 'कार्ये या यशस्विता दृष्टा सा तु अपूर्वस्य अनुग्रहतः। अपूर्वः प्रशंसां सर्वथ



अनिच्छन् दूरे तिष्ठति। अतः एव राजादयः मम प्रशंसां कुर्वन्ति। 'प्रशंसार्थम् अर्हः न अहम्, अपि तु अपूर्वः' इति वदामि चेदपि कोऽपि तत्र न विश्वसिति। सर्वे प्रशंसाभारं मयि आरोपयन्ति' इति चिन्तयति समीरः।

सप्ताहाभ्यन्तरे सत्कारादिकोलाहलः समाप्तः। अनपेक्षितं प्रशंसाभारम् अनिवार्यतया वहन् समीरः गृहं प्रत्यागतवान्। गृहात् अनतिदूरे प्रशान्ते स्थले मौनं किञ्चित्कालम् उपविष्टवान् सः। 'अपूर्वः द्रष्टव्यः। सत्कारादिकं निवेद्य सर्वस्य भवान् एव पात्रम् इति उक्त्वा निश्चिन्तता प्राप्तव्या' इति चिन्तितवान् समीरः। 'सौहार्दभावेन एकाग्रचित्तेन यदा भवान् मां स्मरति तदा अहं भवतः पुरतः उपस्थास्यामि' इत्येतत् अपूर्वस्य वचनं स्मृतवान् समीरः।

समीरः समीपस्थायाः निर्झरिण्याः तीरं गत्वा शिलायाः उपरि उपविश्य नेत्रे निमील्य एकाग्रबुद्ध्या अपूर्वं गाढं स्मृतवान्। अनन्तरक्षणे एव समीपात् स्वरः श्रुतः– "समीर! अहम् अत्र अस्मि" इति।

मन्दहासपूर्वकं समीपे एव स्थितस्य अपूर्वस्य अपूर्वं शरीरं निर्निमेषं पश्यन् मौनं स्थितवान् समीरः।

"समीर! आवयोः मनसः समाना प्रवृत्तिः दृष्टा खलु? यदा भवान् मां द्रष्टुम् इष्टवान् तदा एव अहम् अपि भवतः दर्शनं चिन्तयन् आसम्। अतः भवान् मां स्मृतवान् यत् तेन मम महान् सन्तोषः जातः। झटिति अहम् उपस्थितः" इति मन्दहासपूर्वकम् उक्तवान् अपूर्वः।

अपूर्वस्य दर्शनात् आनन्दातिरेकात् च रोमाञ्चितः अस्ति समीरः। तस्य नेत्राभ्याम् आनन्दाश्रूणि आगतानि। प्रतिवचनं किमपि वक्तुं न शक्तवान् सः।

"परस्परदर्शनात् आवाभ्यां महान् आनन्दः प्राप्तः खलु? आनन्दः एव जीवनस्य सारः। अतः सर्वे आनन्दं प्राप्तुं यथा शक्नुयुः तथा कोऽपि प्रयत्नः करणीयः। भवतः ग्रामस्य स्थितिम् एव परिशीलयतु तावत्। कति निर्धनाः सन्ति! उदरपूरणार्थं तेषां न आहारः, मानरक्षणार्थं न पर्याप्तं वस्त्रम्।

शोचनीयावस्थायां सन्ति ते। तेषां मुखे अपि हासः यथा दृश्येत तथा किमपि करणीयम्" इति उक्तवान् अपूर्वः।

"किमपि करणीयम् इत्यत्र मम सहमतिः अस्ति श्रीमन्! मद्ग्रामे स्थितानां दरिद्राणां दयनीयां दशाम् अपि जानामि अहम्। किन्तु एतावता किं वा कर्तुं शक्येत? दारिद्र्यम् अपगतं चेदेव तेषां मुखे सन्तोषः दृश्येत। बालस्य मम हस्ते धनं कुतः? धान्यवस्त्रादीनि कुतः? एवं स्थिते किं वा कर्तुं शक्नुयाम् अहम्?" इति सविषादम् उक्तवान् समीरः।

"मित्र! समीर! 'श्रीमन्' 'महोदय' इत्येवं मम सम्बोधनं न करणीयम् इति मया पूर्वम् एव उक्तं खलु? मित्र इति एव आह्वयतु, तावता अलम्। यदि भवतः हस्ते धनं स्यात् तर्हि निर्धनानां साहाय्यं सेवां च कर्तुं सिद्धः वा भवान्? तर्हि धनं नास्ति इति चिन्तां परित्यजतु। धनं भवतः हस्ते यथा स्यात् तथा अहं करिष्यामि। अग्रे किं करणीयम् इति चिन्तयतु भवान्" इति उक्तवान् अपूर्वः।

"मित्र! ममापि भवति मैत्रीभावः एव अस्ति। तथापि भवतः महिमातिशयं स्मृत्वा श्रीमन् इति सम्बोधनं कृतं मया। अस्तु तावत्। इतः परं मित्र इत्येव सम्बोधयामि। किन्तु मम प्रश्नः– कथं भवान् धनं सम्पादयिष्यति? इति" इति उक्तवान् समीरः।

"यदा अहं समुद्रचोराणां नौकायाम् आसं



तदा मया तेषां वार्तालापतः ज्ञातं यत् कुत्रापि शिलाद्वीपे निहितः निधिः तैः ज्ञायते इति। दशाभ्यः वर्षेभ्यः पूर्वं काचित् नवोढा युवराज्ञी यदा पतिगृहं गच्छन्ती आसीत् तदा केचन लुण्ठाकाः हठात् आक्रम्य तस्याः सम्पत्तिं वशीकृतवन्तः इति श्रूयते। ..." इति यावत् अपूर्वः वदन् आसीत् तावता मध्ये उत्साहेन उक्तवान् समीरः– "आम्। मात्रादीनां मुखतः एषा घटना कथारूपेण श्रुता अस्माभिः" इति।

"आम्। तत्काले तु सर्वेषां मुखे एषा घटना एव विलसति स्म इति श्रूयते। अनर्घ्यैः मणिमाणिक्यादिभिः युक्तानि आभरणानि धनं च युवराज्ञीतः वशीकृत्य समुद्रचोराः



शिलाद्वीपे निगूहितवन्तः इति श्रूयते। आभरणविभागविषये चोराणां मध्ये विवादः उत्पन्नः। तेषां दलं द्विधा विभक्तम्। अधिकं भागं प्राप्तुं गणद्वयम् अपि उद्युक्तम् अभवत्। गणद्वयेन अपि समग्रं वशीकर्तुं वञ्चनामार्गः अपि आश्रितः। तदा तयोः गणयोः मध्ये युद्धम् एव प्रवृत्तम्। युद्धे बहवः मृताः। केचन तु भीत्या ततः पलायितवन्तः। एवं पलायितवत्सु अन्यतमः आसीत् एषः गरलकण्ठः। शिलाद्वीपं गत्वा कथमपि तत्रत्यम् ऐश्वर्यं प्राप्य सुखेन जीवनं यापनीयम् इति गरलकण्ठस्य योजना आसीत्। किन्तु सर्वं विपरीतं संवृत्तम्। सः इदानीं कारागारप्रकोष्ठस्य शलाकाः गणयति। गरलकण्ठादीनां वार्तालापतः एव मया शिलाद्वीपस्थस्य निधेः विषयः ज्ञातः" इति उक्तवान् अपूर्वः।

"एवं वा कथा? तर्हि सः गुप्तनिधिः अस्माभिः वशाकर्तुं शक्यः इति भाति। एवं ननु?" इति उक्तवान् समीरः।

"आम्। किन्तु त्वरया अस्माभिः कार्यप्रवृत्तैः भवितव्यम्। यतः स च निधिः तत्र चिरकालं न तिष्ठेत् इति भाति मम। स च निधिः प्राप्तव्यः इति गरलकण्ठगणः तद्विरोधिगणः च प्रयतमानः एव आसीत्। गरलकण्ठगणः कारागारे अस्ति इति ज्ञात्वा तद्विरोधिगणः त्वरया निधिवशीकरणार्थं प्रयत्नं कुर्यात् एव। ततः पूर्वम् एव अस्माभिः निधिः प्राप्तव्यः" इति उक्तवान् अपूर्वः।

"तत् तु सत्यम्। किन्तु शिलाद्वीपः कस्यां दिशि कियद्दूरे अस्ति इति कथं ज्ञातुं शक्नुयाम वयम्?" इति चिन्तामिश्रितेन स्वरेण पृष्टवान् समीरः।

"पूर्वं ये गण्डमीनाः अस्मान् सर्वान् चौरनौकासमीपं नीतवन्तः ते शिलाद्वीपविषये अपि जानीयुः एव। मम इङ्गितं ज्ञात्वा तदनुगुणं व्यवहरिष्यन्ति ते। अतः ते अस्मान् शिलाद्वीपं नेष्यन्ति। समुद्रकाकाः अपि अत्र मार्गं प्रदर्शयितुम् अर्हन्ति। अतः शिलाद्वीपस्य अन्वेषणार्थम् उपायम् अहं चिन्तयिष्यामि। श्वः पूर्णिमा। शिलाद्वीपं प्रति गमनार्थम् उत्तमं दिनं तत्। श्वः एव इतः प्रस्थानं करिष्यावः" इति उक्तवान् अपूर्वः।

अपूर्वस्य उत्साहवर्धकवचनेन सन्तुष्टः समीरः उत्साहेन उक्तवान्– "एवं तर्हि, चोरनौकातः मोचितान् पञ्च बालकान् अपि सहैव नेष्यामः वा वयम्? यतः ते अपि साहसकार्येषु उत्साहिनः एव। भवतः दर्शने अपि महत् कुतूहलम् अस्ति तेषाम्" इति।

अपूर्वः क्षणकालम् आलोच्य– "अस्तु तावत्" इति अङ्गीकारं प्रदर्श्य ततः निर्गतवान्।

समीरः तेषां बालानां मातापितृणाम् अनुमतिं प्राप्य तैः बालैः सह अनन्तरदिने सायङ्कालसमये समुद्रतीरं प्राप्तवान्। ते पञ्च बालकाः अपि अपूर्वस्य दर्शने परमकुतूहलिनः आसन्। यदा तैः समुद्रतीरं प्राप्तं तदा तत्र उपस्थितः आसीत् अपूर्वः। पञ्च बालकाः अपि तं नमस्कृतवन्तः। "नमस्कारार्हः सः देवः, न तु अहम्। देव! सर्वम् अर्प्यते मया" इति वदन् आकाशं पश्यन् नमस्कृतवान् अपूर्वः।

पूर्वस्यां दिशि पूर्णचन्द्रः उदितः। आह्लादकरी चन्द्रिका सर्वत्र व्याप्ता। अपूर्वः क्षणकालं नेत्रे निमील्य गण्डमीनान् स्मृतवान्। अनन्तरक्षणे एव समुद्रजलम् आकाशे प्रेरयन्तः गण्डमीनाः आगच्छन्तः दृष्टाः। ते मीनाः तीरं प्राप्य विचित्रं ध्वनिम् उत्पाद्य 'प्रयाणार्थं सिद्धा वयम्' इति भावं प्रदर्शितवन्तः।

महतः गण्डमीनस्य उपरि अपूर्वः



उपविष्टवान्। तस्य सूचनायाः अनुगुणं समीरः अन्ये बालाः च एकैकं मीनम् आरुह्य उपविष्टवन्तः। तेषां रक्षणार्थं द्वादश अन्ये मीनाः उभयतः आगत्य स्थितवन्तः। अनन्तरं एतस्य गणस्य प्रयाणम् आरब्धम्।

अपूर्वः यं महागण्डमीनम् आरूढवान् अस्ति सः गणस्य अग्रे अस्ति। केचन काकाः एतस्य गणस्य अग्रे उड्डयमानाः मार्गदर्शनं कुर्वन्ति स्म। प्रशान्ते समुद्रे मन्दः वायुः वाति स्म। अतः प्रयाणम् अतीव आह्लादकरम् आसीत्। यदा चन्द्रः मध्याकाशम् आगतः तदा तैः राक्षससमूहसदृशाः शिलासमूहाः दृष्टाः। एषः प्रदेशः एव शिलाद्वीपः इति ज्ञातवान् अपूर्वः। गण्डमीनाः शिलानां समीपं गत्वा शिलाम् आलम्ब्य स्थितवन्तः। अपूर्वः



समीरादयः च मीनेभ्यः अवतीर्य शिलाद्वीपे पदानि स्थापितवन्तः।

शिलाद्वीपे शिलानां मध्ये तत्र तत्र गुहाः दृश्यन्ते स्म। एतादृश्यः गुहाः तत्र बह्व्यः आसन्। एतासु कस्यां निधिः स्यात् इति अन्वेषणं न तावत् सुकरम्। बालाः उत्साहेन गच्छन्तः एकैकशः गुहासु दृष्टिं पातितवन्तः। एवं दर्शनसमये कस्याञ्चित् गुहायां प्रकाशमानं किञ्चन वस्तु दृष्टं समीरेण। समीरः कुतूहलेन अवनम्य सर्पन् गुहां प्रविष्टवान्। तत्र फूत्कुर्वन्तः सर्पाः दृष्टाः तेन। सः भीत्याः झटिति प्रत्यागतवान्। अपूर्वस्य उपस्थितिं जानन्तः ते सर्पाः शान्ततया स्थितवन्तः।

"इदानीं शिलाद्वीपः अन्विष्टः। पुनः कदाचित् आगत्य निधेः अन्वेषणं करवाम वयम्" इति खिन्नं समीरं सान्त्वनवचनानि उक्तवान् कश्चन बालकः।

तावता कमपि विशेषं जानन् अपूर्वः मन्दस्वरेण– "हुष् ... सर्वे मौनं तिष्ठन्तु। शिलानां मध्ये निलीय तिष्ठाम वयम्" इति उक्तवान्। सर्वे विना शब्दं शिलानां मध्ये निलीय स्थितवन्तः।

शिलानाम् अन्यस्मिन् पार्श्वे कृतः कस्यचित् हासध्वनिः श्रुतः। अपूर्वः कर्णं प्रसार्य तत्र प्रचलत् सम्भाषणं सध्यानं श्रुतवान्।

"अहो! दशानां वर्षाणाम् अनन्तरम् इदानीम् अस्माकं स्वप्नः फलितः। निधिः दृष्टिगोचरः जातः। निधिप्राप्तौ ये विघ्नम् आचरन्ति स्म ते इदानीं परलोके कारागारे वा सन्ति। वयम् एव भाग्यशालिनः" इति हसन् उक्तवान् कश्चित्।

"अलं विलम्बाचरणेन। शीघ्रं निधिः नौकायां स्थापनीयः" इति सानुरोधम् आज्ञास्वरेण उक्तवान् अपरः।

"किं त्वरया? मम तु महती बुभुक्षा। अतः प्रथमं पूर्णोदरं भोजनम्। अनन्तरं च कार्यचिन्तनम्। अल्पः विलम्बः कृतः चेत् किम् अस्मद्वशीभूतः निधिः पक्षौ प्राप्य उड्डयनं कुर्यात्?" इति उच्चस्वरेण उक्तवान् अन्यः।

"प्रथमं निधिः समग्रः नौकायां

स्थापनीयः। अनन्तरं स्वेच्छया भोजनं पानं च प्रचलतु नाम। कार्यं तु प्रथमम्" इति आज्ञास्वरेण उक्तवान् पूर्वतनः।

अपूर्वः शिलानां मध्यतः दृष्टिं प्रसारितवान्। अन्यस्मिन् पार्श्वे षट् दृढकायाः दृष्टाः तेन। समीपस्थायां गुहायां निधिपेटिकाः अपि तेन दृष्टाः। ते भीमकायाः चोराः ताः पेटिकाः एकैकशः नौकायां स्थापितवन्तः। अर्धघण्टाभ्यन्तरे एतत् कार्यं तैः समापितम्।

"कार्यं सम्पन्नम्। इतः परं भोजनं करवाम। पानोत्सवः अपि प्रचलतु नाम। यदि पूर्वम् एव भोजनं कृतं स्यात् तर्हि पेटिकानां नयनं क्लेशाय अभविष्यत्। इदानीं तु निश्चिन्तता" इति उक्तवान् सः नायकः इव दृश्यमानः जनः।

"आम्। भवतः दूरदर्शिता योग्या एव" इति उक्त्वा ते अनुयायिनः नौकातः महद्भिः पात्रैः आहारवस्तूनि पानीयकूपिकाः आनीय तीरे स्थापितवन्तः। विशालायाः शिलायाः उपरि मण्डलाकारेण उपविश्य ते सन्तोषेण खादन्तः, पिबन्तः, जल्पन्तः नृत्यम् अपि कृतवन्तः। तेषां स्वेच्छाचारस्य निरोद्धा कः अस्ति तस्मिन् निर्जनद्वीपे?

"निश्शब्दम् आगच्छन्तु। इतः पलायनार्थम् एषः एव सुसमयः। अमूल्यः निधिः चोरैः नौकायां स्थापितः अस्ति। चोराश्च सुरां पीत्वा मूर्च्छिताः सन्ति। यावत् ते सचेतनाः न भवन्ति ततः पूर्वम् एव अस्माभिः नौकाम् आरुह्य एतत् तीरं परित्यक्तव्यम्। विलम्बः मास्तु इदानीम्" इति उक्त्वा तीरस्थायाः नौकायाः समीपं गतवान् अपूर्वः।

सर्वे बालाः उत्साहेन तम् अनुसृत्य नौकाम् आरूढवन्तः। तदा तत्र आगताः गण्डमीनाः मुखेन नौकां प्रेरितवन्तः। नौका ततः प्रस्थिता। केचन गण्डमीनाः नौकाम् आकृष्य अग्रे नीतवन्तः। पानमूर्च्छिताः चोराः अपूर्वादीनां नौकारोहणं तैः कृतं निधेः नयनं वा न ज्ञातवन्तः एव। —(अनुवर्तते)






# पदवीप्राप्तिकामना

कर्तव्यपालनदक्षः राजा त्रिविक्रमः वेतालवहनम् अपि स्वकर्तव्यं भावयन् इव पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवान् तु केनचित् सदुद्देशेन कार्यप्रवृत्तः स्यात्। किन्तु भवतः आशयं जानन्तः कति जनाः तदनुगुणं व्यवहरेयुः?. राजन्! लोकः विचित्रः। सर्वेषु विश्वासः न करणीयः। कीर्तिकामना अधिकारलालसा इत्यादयः उत्तमान् अपि परिवर्तयिष्यन्ति। एवं परिवृत्ताः जनाः स्वार्थसाधनार्थं यत्किमपि कर्तुं सिद्धाः भवन्ति। लोकनाथः अत्र उदाहरणम्। भवतः श्रमं प्रतिदिनं पश्यन् अहं खेदम् अनुभवामि। अतः भवतः मार्गायासस्य परिहारार्थं लोकनाथस्य कथां श्रावयामि।

## वेतालकथा



श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं कोसलराज्यस्य शूरपुरमण्डले चन्द्रगिरिनामके ग्रामे लोकनाथः नाम कश्चित् निवसति स्म। सः ग्रामाधिकारिणः कार्यालये लघूद्योगे अस्ति।

कदाचित् सः ग्रामाधिकारिणं निवेदितवान्– "श्रीमन्! कुटुम्बरथस्य आकर्षणे असमर्थः जातः अस्मि। यावत् आयः न वर्धते तावत् कष्टम् अस्ति एव। यदि मम ज्येष्ठः पुत्रः अपि उद्योगी भवेत् तर्हि किञ्चिदिव वरं स्यात्। अतः मत्पुत्राय कृपया कोऽपि उद्योगः दातव्यः" इति।

तदा ग्रामाधिकारी हसन्– "लोकनाथ! एतस्य ग्रामस्य समग्रां स्थितिं भवान् जानाति एव। रिक्तः उद्योगावकाशः कोऽपि नास्ति। वृद्धः भवान् इतोऽपि बहूनि दिनानि यावत् उद्योगभारं निर्वोढुं न शक्नुयात्। अतः स्वस्य उद्योगं भवान् इदानीम् एव परित्यजतु। तस्मिन् उद्योगे भवत्पुत्रम् एव नियोजयिष्यामि" इति उक्तवान्।

लोकनाथः गृहं गत्वा पत्नीं प्रवृत्तं समग्रं निवेद्य– "अहम् उद्योगं त्यक्तुम् इच्छामि। मम स्थाने मम पुत्रं नियोजयिष्यामि" इति उक्तवान्।

'उद्योगः परित्यक्तः चेत् पत्युः हस्ते धनादिकं न भवेत्। तदा स्नुषा तं मां च अनादरेण पश्येत्। अतः उद्योगपरित्यागः न उचितः' इति लोकनाथपत्न्याः चिन्तनम्। अतः सा उद्योगत्यागः मास्तु इति बहुधा उक्तवती। तथापि लोकनाथः दृढनिश्चयं कृत्वा उद्योगं परित्यक्तवान्, पुत्रं तत्र नियोजितवान् च।

अनन्तरं लोकनाथः– 'प्रतिवर्षं प्राप्यमाणे धान्ये अर्धं दातव्यम्' इति नियमम् अङ्गीकृत्य कृष्यर्थम् अन्यस्य क्षेत्रं स्वीकृतवान्। द्वितीयपुत्रस्य साहाय्येन कृषिम् आरब्धवान्।

अत्रान्तरे दूरग्रामनिवासी धनिकः लोकनाथस्य बन्धुः कदाचित् कस्यापि कार्यस्य निमित्तं चन्द्रगिरिग्रामम् आगतवान्। कुशलप्रश्नानन्तरं वार्तालापमध्ये तं